चतुर्दशः पाठः

# vgg vk% p

अजीजः सरलः परिश्रमी च आसीत्। सः स्वामिनः एव सेवायां लीनः आसीत्। एकदा सः गृहं गन्तुम् अवकाशं वाञ्छति। स्वामी चतुरः आसीत्। सः चिन्तयति–‘अजीजः इव न कोऽपि अन्यः कार्यकुशलः। एष अवकाशस्य अपि वेतनं ग्रहीष्यति।’ एवं चिन्तयित्वा स्वामी कथयति–‘अहं तुभ्यम् अवकाशस्य वेतनस्य च सर्वं धनं दास्यामि।’ परम् एतदर्थं त्वं वस्तुद्वयम् आनय–‘अहह!’ ‘आः!’ च इति।

एतत् श्रुत्वा अजीजः वस्तुद्वयम् आनेतुं निर्गच्छति। सः इतस्ततः परिभ्रमति। जनान् पृच्छति। आकाशं पश्यति। धरां प्रार्थयति। परं सफलतां नैव प्राप्नोति। चिन्तयति, परिश्रमस्य धनं सः नैव प्राप्स्यति। कुत्रचित् एका वृद्धा मिलति। सः तां सर्वां व्यथां श्रावयति। सा विचारयति–‘स्वामी अजीजाय धनं दातुं न इच्छति। सा तं कथयति–‘अहं तुभ्यं वस्तुद्वयं ददामि।’ परं द्वयम् एव बहुमूल्यकं वर्तते। प्रसन्नः सः स्वामिनः समीपे आगच्छति।



अजीजं दृष्ट्वा स्वामी चकितः भवति। स्वामी शनैः शनैः पेटिकाम् उद्घाटयति। पेटिकायां लघुपात्रद्वयम् आसीत्। प्रथमं सः एकं लघुपात्रम् उद्घाटयति। सहसा एका मधुमक्षिका निर्गच्छति। तस्य च हस्तं दशति। स्वामी उच्चैः





वदति–'अहह!। द्वितीयं लघुपात्रम् उद्घाटयति। एका अन्या मक्षिका निर्गच्छति। सः ललाटे दशति। पीडितः सः अत्युच्चैः चीत्करोति–'आः' इति।

अजीजः सफलः आसीत्। स्वामी तस्मै अवकाशस्य वेतनस्य च पूर्णं धनं ददाति।



## शब्दार्थाः

| | | | |
|---|---|---|---|
| **लीनः** | – | संलग्न, तल्लीन | engaged |
| **वाञ्छति** | – | चाहता/चाहती है | wishes/wants |
| **कोऽपि**(कः+अपि) | – | कोई भी | whosoever |
| **आनय** | – | लाओ | bring |
| **अहह** | – | कष्टसूचक अव्यय | oh! |
| **आः** | – | पीड़ासूचक अव्यय | ah! |
| **आनेतुम्** | – | लाने के लिए | to bring |
| **निर्गच्छति** | – | निकलता है | comes out/exits |
| **इतस्ततः**(इतः+ततः) | – | इधर-उधर | here and there |
| **धराम्** | – | पृथ्वी को | the earth |
| **प्राप्स्यति** | – | पाएगा | will receive |
| **व्यथाम्** | – | दुःख को | pain |
| **सद्यः** | – | तत्काल, तुरन्त | instantly |
| **अर्पय** | – | दे दो | give |
| **उद्घाटयति** | – | खोलता है | opens |





| | | |
|---|---|---|
| **दशति** - | डसती है, काटती है | bite |
| **अत्युच्चैः**(अति+उच्चैः) - | बहुत जोर से | very loudly |
| **चीत्करोति** - | चिल्लाता है | cries |



## अभ्यासः

**1. अधोलिखितानां पदानां समुचितान् अर्थान् मेलयत-**

| क | ख |
|---|---|
| हस्ते | अकस्मात् |
| सद्यः | पृथ्वीम् |
| सहसा | गगनम् |
| धनम् | शीघ्रम् |
| आकाशम् | करे |
| धराम् | द्रविणम् |

**2. मञ्जूषातः उचितं विलोमपदं चित्वा लिखत-**

| प्रविशति | सेवकः | मूर्खः | नेतुम् | नीचैः | दुःखितः |
|---|---|---|---|---|---|

(क) चतुरः ....................

(ख) आनेतुम् ....................

(ग) निर्गच्छति ....................

(घ) स्वामी ....................





(ङ) प्रसन्नः ....................

(च) उच्चैः ....................

**3.** **मञ्जूषातः उचितम् अव्ययपदं चित्वा रिक्तस्थनानि पूरयत–**

| इव | अपि | एव | च | उच्चैः |
|---|---|---|---|---|

(क) बालकाः बालिकाः .................... क्रीडाक्षेत्रे क्रीडन्ति।

(ख) मेघाः .................... गर्जन्ति।

(ग) बकः हंसः .................... श्वेतः भवति।

(घ) सत्यम् .................... जयते।

(ङ) अहं पठामि, त्वम् .................... पठ।

**4.** **अधोलिखितानां प्रश्नानाम् उत्तरं लिखत–**

(क) अजीजः गृहं गन्तुं किं वाञ्छति?

(ख) स्वामी मूर्खः आसीत् चतुरः वा?

(ग) अजीजः कां व्यथां श्रावयति?

(घ) अन्या मक्षिका कुत्र दशति?

(ङ) स्वामी अजीजाय किं दातुं न इच्छति?



**5. निर्देशानुसारं लकारपरिवर्तनं कुरुत-**

**यथा**–अजीजः परिश्रमी आसीत्। (लट्लकारे) अजीजः पश्रिमी अस्ति।

(क) अहं शिक्षकाय धनं ददामि। (लृट्लकारे) ........................................

(ख) परिश्रमी जनः धनं प्राप्स्यति। (लट्लकारे) ........................................

(ग) स्वामी उच्चैः वदति। (लङ्लकारे) ........................................

(घ) अजीजः पेटिकां गृह्णाति। (लृट्लकारे) ........................................

(ङ) त्वम् उच्चैः पठसि। (लोट्लकारे) ......................................

**6. अधोलिखितानि वाक्यानि घटनाक्रमानुसारं लिखत।**

(क) स्वामी अजीजाय अवकाशस्य पूर्णं धनं ददाति।

(ख) अजीजः सरलः परिश्रमी च आसीत्।

(ग) अजीजः पेटिकाम् आनयति।

(घ) एकदा सः गृहं गन्तुम् अवकाशं वाञ्छति।

(ङ) पीडितः स्वामी अत्युच्चैः चीत्करोति।

(च) मक्षिके स्वामिनं दशतः।



